कातीये तूत्करात्सौम्यामूवध्यं रथमात्रके
ऊवध्यात्प्राक्च शामित्रं रथमात्रे भवेदिति १२६
वेद्यंसोत्करयोर्मध्यादुदक्षोडशसंमिते
शामित्रस्य भवेद्धिष्गयमित्यापस्तम्बके स्फुटम् १२७
मार्जाल्याग्नीध्रमध्यीयादुदक्सूत्रे प्रसाधिते
वेदिपार्श्वगसूत्रेऽस्य संपातो यत्र वै भवेत् १२८
तस्मात्त्यरत्निः परितो ह्याग्नीध्रीयस्य मगडपः
षडरत्निश्चतुष्कोगो याम्यद्वारः परिश्रितः १२९
द्वारमानं तु वाधूलेऽरत्निर्वा षोडशाङ्गुलम्
तद्दिक्परिश्रयाभावात्सर्वं द्वारमितीतरे १३०
तस्मिन्नुदङ्मध्यसूत्रे धिष्णियं स्यादरत्निना
यथान्तर्वेदिधिष्गयोदक्संचरोऽत्र पदार्धकः १३१
मार्जालीयोऽप्येवमेव स तूदग्द्वारवानिह
धिष्गययाम्यां संचरः स्याद्यथान्तर्वेदि पूर्ववत् १३२
तस्मिन्दक्षिगभागे तु प्रक्षालनखरो भवेत्
मगडपौ वेदिवद्वक्रौ ह्यथवा शुद्धदिग्गतौ १३३
मध्ये वेदेरित्युक्तत्वान्मध्यत्र्यंशेऽनयोः स्थितिः
उत्तरांसे महावेद्यामास्तावः परिकीर्तितः १३४
अच्छावाकस्य धिष्गयं तु ह्यधिकं चतुरङ्गुलैः
औदुम्बरी निखातोर्ध्वं यजमानेन संमिता १३५
तथोपरवपूर्वस्यां पात्रपर्याप्तकः खरः
तस्मात्पुरोऽवशिष्टोऽत्र मगडपान्तस्तु संचरः १३६
पूर्वग्रन्थानुसारोऽयं विहारः परिकल्पितः
अथ शुल्बोक्तप्रकारेगाग्निं विमिमीते--
अपरस्य श्येनचितो वक्ष्ये पुंमानतोऽङ्कनम् १३७

यूपावटापरप्रान्तात्पदार्धं संचरं त्यजेत्
अग्निक्षेत्रं ततः पश्चात्सपादपुरुषत्रयम्  १३८
तत्राऽऽद्यचिह्नं पृष्ठ्यायां ततः प्राक्पादहीनके
पादद्वयेऽ ६० थ पुरुषे १२० त्वर्धे ६० पादे च ३० पादके ३०  १३९
आद्यात्सप्तसु चिह्नेषु व्यन्त्येषूदक्प्रसाधयेत्
तत्राङ्कनं चिह्नदेशाद्दक्षिणोत्तरपार्श्वयोः  १४०
प्रथमात्पुरुषे शङ्कुर्द्वितीयात्पादसंमिते
शङ्कुत्रयं तृतीयात्स्यात्त्रिपादे प्रथमस्ततः  १४१
पुरुषाष्टयंशत्रितयविहीने पुरुषद्वये
नितोदजनकावेतौ ततः पादे तृतीयकः  १४२
एवमेव चतुर्थात्स्यात्पञ्चमात्पादमानके
षष्ठादपि चतुर्थांशे मूर्ध्नोऽन्तः सप्तमेऽङ्कके  १४३
त्रितूर्यसूत्रयोर्मध्ये पक्षाग्राणां स्थितिर्भवेत्
पुरुषस्य चतुर्थेन चतुरश्रचतुष्टयम्  १४४
कृत्वाऽक्ष्णया द्विधा कुर्यादग्नीशार्धानि संत्यजेत्
सार्धाष्टयंशविहीने तु पुरुषे मध्यसूत्रकम्  १४५
पक्षसंनमनार्थं हि दद्यात्प्रागपरायतम्
तस्मिञ्जनकशङ्कुभ्यां पुरुषायामदण्डयोः  १४६
मेलनं यत्र जायेत तं नितोदं प्रकल्पयेत्
तस्मात्प्राक्पुरुषेऽन्यं हि नितोदं पूर्ववत्त्विह  १४७
नितोदपत्रमूलाग्रान्त्येषु शङ्कून्प्ररोपयेत्
मूर्धान्तात्सर्वशः शङ्कून्सूत्रेण परिवेष्टयेत्  १४८
श्येनाकृतिर्वक्रपक्षो व्यस्तपुच्छश्चतुर्दलः
अन्तः सप्तविधो ह्यग्निः प्रादेशारत्नियुग्भवेत्  १४९
पुच्छं त्रिप्रक्रमायाममात्माऽष्टौ द्विमितं शिरः

चत्वारः पक्षविस्तारः साङ्घ्र्यष्टौ दीर्घता मता १५०
शिरोऽन्त्ये चाऽऽत्मकण्ठांसश्रोणिमूलास्तु पादिकाः
पुच्छमूलाग्रगे चान्या रीतयः प्रक्रमात्मकाः १५१
अङ्कनावसरे त्वेषु स्थानेषूदक्प्रसाधयेत्
पश्चादङ्कुटकश्लिष्टमूर्ध्वमुद्योजनं तु तत् १५२
अन्तर्यामं त्वङ्कुटाख्यं सूक्ष्माग्रं वक्रकाष्ठजम्
प्राञ्चं काष्ठं चाङ्कुटस्पृग्दीर्घमीषेति संज्ञितम् १५३
उद्योजनोर्ध्वभागस्थः काष्ठकीलः खगल्पकम्
फालाङ्कुटकयोगार्थं लोहजं वलयं शफम् १५४
लोहफालः कर्षसहो ह्यष्टापदनिरूपितः
ईषाग्राधःस्थितं दारु रज्जुप्रोतं तु तालकम् १५५
सीरेषावेष्टकारज्जुर्वरत्राख्याऽत्र चर्मजा
गलशृङ्गादिरज्जूनां समुदायं शणादिजम् १५६
एतत्सर्वं प्रतीनाहवाच्यं द्वित्वं गणद्वयात्
युगप्रान्तगते शम्ये मण्डूक्यौ ते प्रकीर्तिते १५७
बलीवर्दौ युजौ प्रोक्तौ द्वौ द्वौ प्रतियुगं त्विह
वृषस्कन्धोपरिस्थं तु तिर्यक्काष्ठं युगं मतम् १५८
एतद्गुणविशिष्टं तु लाङ्गलं संप्रसाधयेत्
धूर्तभाष्याशयादेवमुक्तं लाङ्गललक्षणम् १५९
कीनाशाः कर्षकाः प्रोक्ता बलीवर्दा वृषाः स्मृताः
सीतान्तरालं समरः सीता लाङ्गलपद्धतिः १६०
बहुदर्भमयो मुष्टिर्ग्रमुष्टिरिति कथ्यते

अथ प्रथमायाश्चितेः शुल्बोपधानम्

प्रस्तारस्याऽऽदिमस्याथ वक्ष्ये शुल्बोपधानकम् १६१
पुच्छाग्ररीतौ संसक्ताः पाद्याः स्युर्दश पञ्च च

षोडश्यः षड्द्वितीयस्यां तृतीयस्यां चतुष्टयम् १६२
पाद्याश्चतुर्थ्यां पञ्चैवं पुच्छे स्युस्त्रिंशदिष्टकाः
आत्ममूलाख्यपञ्चम्यां संसक्ताः पञ्च पादिकाः १६३
षष्ठ्यां चतस्त्रः षोडश्यः सप्तम्यां रुद्रपादिकाः
अष्टम्यादिचतुष्के तु षोडश्यः पञ्च पञ्च च १६४
अन्त्या बाह्यविशेषाः स्युरग्नीशानाग्रगाश्च ताः
अग्राणामपरप्रान्तश्चाप्ययाग्रप्रपूरकः १६५
यथायोगं तु मध्यस्था द्वादश्यां रुद्रपादिकाः
त्रयोदश्यां चतस्त्रः स्युः षोडश्यस्तु ततः पुरः १६६
चतुर्दश्यां पञ्च पाद्या एवं षष्टिरिहाऽऽत्मनि
षोडश्यौ द्वे पञ्चदश्यां षोडश्यां पादिकात्रयम् १६७
ततः शिरोग्रपाद्यैका शिरस्येवं षडिष्टकाः
अष्टम्यादिचतुष्कस्य पार्श्वयोः पक्षसंस्थितिः १६८
चतस्त्रो रीतयः पक्ष एकैकस्यां त्रयोदश
पक्षाप्ययास्तु मूलस्थाः पक्षमध्यास्तु मध्यतः १६९
पक्षाग्रीयाः प्रान्त्यसंस्था अन्याः पक्षेष्टकाः स्मृताः
एकैकस्मिंस्तु पक्षे ता द्विपञ्चाशदिहेष्टकाः १७०
पुच्छात्मशीर्षपक्षाणां मिलित्वा तु शतद्वयम्
प्रस्तारेऽस्मिन्समुपन्नाश्चतस्त्रः पुच्छरीतयः १७१
दश चाऽऽत्मनि शीर्ष्णि द्वे एवं षोडशसंख्यकाः
विषमे ता उदीच्यः स्युरेतद्भिन्ना शिरोग्रगा १७२
पक्षयो रीतयस्तद्वच्चतस्त्र उदगायताः
तत्र मन्त्रोपधानादि पूर्वक्लृप्तं प्रग्रथ्यते १७३
त्र्यालिखितां मध्ये
यस्यां तु सरला लेखा सर्जुलेखा प्रकीर्तिता

प्रदक्षिणावृता लेखा दक्षिणावृदिह स्मृता  १७४
यस्यां सव्यावृता लेखा सव्यावृदिति सेष्टका
ऊर्ध्वलेखास्तु तिस्रः स्युर्यस्यां त्र्यालिखिता मता  १७५
ऋजुलेखाः पुरः पश्चान्मध्ये त्र्यालिखिताः स्मृताः
उदक्सव्यावृतो ज्ञेया दक्षिणा दक्षिणावृतः  १७६
प्राचीरुपदधातीति प्रतीचीर्यत्र वा श्रुतिः
गुणेषु रीतिवादोऽयमुपधानविधौ विधिः  १७७
प्राचीं प्रतीचीं कर्तुस्तु मुखवाद इतीरितः
पुरस्तात्तु प्रतीचीश्च पश्चात्प्राचीरिति श्रुतिः  १७८
तत्रापवर्गवादः स्यात्सर्वत्रैवं विचारयेत्
पुच्छाग्रमध्याऽऽक्रमणी पाद्या स्यात्प्रत्यगग्रगा  १७९
दर्भस्तम्बं तु मध्येऽग्नेरवटं तत्समन्ततः
खात्वा तत्र स्रुवादीनामुपधानं भवेच्च तत्  १८०
येन भूमिविघातः स्यात्तत्सर्वमवटे क्षिपेत्
प्राणाद्वायोर्बहिर्भावस्त्वनुप्राणनमुच्यते  १८१
अवेदवित्त्वविद्वान्स्याद्यज्वद्रव्याद्वरं ददेत्
हिरण्यशकलं त्वेवाग्रेष्टकाशब्दितं विदुः  १८२
पुच्छमूले तु मध्यस्था पादिका मण्डलेष्टका
मण्डलोदक्पादिके द्वे अन्वारोहे प्रकीर्तिते  १८३
आत्मतृतीयरीतौ तु वामभृत्स्याद्द्वितीयका
वामभृत्पूर्वरीत्यां तु रेतःसिक्पञ्चमी भवेत्  १८४
तत्पूर्वा षोडशी चान्या तृतीया तु तदुत्तरा
द्वे वा तदोत्तरा काले साऽपि लोकंपृणा भवेत्  १८५
आत्ममूलस्थपाद्यानां विश्वज्योतिर्द्वितीयका
आत्मोपोत्तमपङ्क्तौ तु संयान्याद्या तृतीयका  १८६

तत्पूर्वरीत्यां संयानी चतुर्थी पादिकाऽपरा
अपांशरोऽवका प्रोक्ता वाप्यादौ सेह दृश्यते १८७
शीर्ष्ण्युदक्षोडशीपाद्ये संश्लिष्टे द्वे ऋतव्यके
रेतःसिचः पुरस्तात्तु घर्माख्या चाऽऽत्मपार्श्वगा १८८
आत्ममूलस्थपाद्यानां तृतीयाऽऽपाढिकामता
सप्तम्यामात्मपार्श्वेऽन्त्या षोडशी तु कुलायिनी १८९
ग्रीवाद्यपाद्या तत्पश्चात्षोडशी दक्षिणाग्रगा
तत्पश्चात्पादिकापङ्क्तौ द्वितीया च तृतीयका १९०
आत्मदक्षिणपार्श्वस्थाश्चतस्रः स्युरुपादिमाः
तत्पश्चात्पादिकापङ्क्तौ तृतीया च चतुर्थिका १९१
तत्पश्चात्षोडशी चाऽऽद्या तत्पश्चान्मूलपादिका
आद्यावृतौ द्वादशैताः पुरुषाख्यचितीष्टकाः १९२
आत्माष्टम्यां चतस्रः स्युः पञ्चम्याद्यास्तु पादिकाः
मध्यस्थषोडशीनां तु या च प्रागपराऽऽवलिः १९३
तत्पश्चात्पादिकापङ्क्तौ पञ्चम्यादि चतुष्टयम्
एता द्वितीये चाभ्यासे पुंचितौ द्वादशेष्टकाः १९४
ग्रीवागतोत्तरा पाद्या पश्चात्षोडशिकाऽन्तिमा
तत्पश्चात्पादिकापङ्क्तौ नवमी दशमी तथा १९५
चतस्रस्तूत्तरे पार्श्वे षोडश्यः स्युरुपोत्तमाः
तत्पश्चात्पादिकारीत्यां नवमी दशमी ततः १९६
अन्तिमा षोडशी पश्चान्मूलगोत्तरपादिका
एतास्तृतीयकेऽभ्यासे पुंचितौ द्वादशेष्टकाः १९७
शीर्ष्ण्युपोत्तमपङ्क्त्यां तु दक्षिणा पादिका ततः
पाश्चात्यषोडशीशिष्टं ग्रीवास्थं पादिकाद्वयम् १९८
तत्पश्चात्षोडशी शिष्टा पञ्चापस्यास्तु पूर्वगाः

अथ दक्षिणपक्षे तु पक्षाग्रीया तु पूर्वगा १९९
तामारभ्योत्तरासंस्थाः पञ्चापस्यास्तु दक्षिणाः
पुच्छे तु श्रोणिगे पाद्ये तिस्रोऽन्त्या याम्यपार्श्वगाः २००
पञ्चापस्याः पश्चिमायामेताः प्रागपवर्गगाः
उत्तरे त्वथ पक्षे तु पक्षाग्रीया तु पूर्वगा २०१
तामारभ्यैव पञ्च स्युर्याम्यसंस्था अपस्यकाः
एवं विंशतिसंख्याका अपस्या दिक्चतुष्टये २०२
शोरोग्रया दक्षिणे पक्षे पूर्वा स्यादप्ययेष्टका
तद्वदुत्तरपक्षस्था चाऽऽत्माष्टम्यां चतुर्थिका २०३
तथाऽऽत्मनस्तृतीयस्यां रीत्यामाद्यान्तपादिके
अष्टम्यामपि चाऽऽद्यान्ते पुच्छोदक्श्रोणिपादिका २०४
मन्त्रोक्तावयवस्थानास्त्रिवृतो नव ईरिताः
त्रिवृतामुपधानं तु नवस्थानेषु तद्भवेत् २०५
मन्त्रो द्विवचनोपेतोऽपि स्यादत्र प्रतीष्टके
वचनोत्तममन्त्रेण यथा चौपरवी क्रिया २०६
अथवा श्रोणिपक्षान्तस्थानेषु स्याद्द्वयोर्द्वयोः
एकैकेन च मन्त्रेण युगपच्चोपधानकम् २०७
शिष्टेषु पूर्ववच्चैवं षण्मन्त्रैरिष्टका नव
अनुवाकद्वयेनोक्ता ह्यृषिसंज्ञास्त्वथेष्टकाः २०८
तासां गणविभागोऽत्र वक्ष्यते पूर्वकल्पितः
अग्न इत्येकमन्त्रः स्यादृतजित्सप्तमन्त्रकः २०९
संयाद्योरसमन्त्रस्तु क्षत्रं पाहीति षट्ककः
विश्वेषु त्वाऽष्टकः प्रोक्तः स्वर्जिदेकादशैव हि २१०
सपत्नादिस्तु षण्मन्त्र उद्बदेकादशः स्मृतः
ईषिसीद नवप्रोक्तः पञ्च संवत्सरे इति २११

चतुर्दशात्मा चैकस्यां पिन्वमानाऽसि षट्ककः
एवं नवतिमन्त्राणां गणास्तु द्वादशेरिताः २१२
उदक्पक्षाप्यया चाऽऽद्या प्रथमा तु ऋषीष्टका
दक्षपक्षाप्ययास्तिस्रश्चतस्रश्चाऽऽत्मपार्श्वगाः २१३
सप्तैता ऋषिसंज्ञाः स्युर्ऋतसद्गणवाचकाः
दक्षपक्षे क्रमाद्धित्वा सपत्रा द्वादशेष्टकाः २१४
पक्षशेषे तु संन्याद्या एकत्रिंशदृषीष्टकाः
क्रमाद्धित्वोत्तरे पक्षे सपत्रा द्वादशेष्टकाः २१५
पक्षशेषे सपत्नाद्या एकत्रिँशदृषीष्टकाः
पुच्छशेषे तु एकस्यामित्याद्या विंशतिः स्मृताः २१६
एवं नवतिसंख्याकाः पूर्वैः प्रोक्ता ऋषीष्टकाः
दक्षिणे पक्षशेषे तु संयतो द्वादशेरिताः २१७
उत्तरे पक्षशेषे तु क्रमात्सप्त वशेष्टकाः
कुम्भ्यः षट्स्तनयुक्ताः स्युः कुम्भा अस्तनका मताः २१८
द्वयोर्मेदेनोपधानं पूरणं युगपद्द्वयोः
कुम्भादुत्तरतः कुम्भीमुपदध्यात्तु सर्वतः २१९
आत्मोपमूलपङ्क्तौ तु द्वितीया ऋषभेष्टकाः
मन्त्रेष्टका एतदन्ता नवहीनं शतद्वयम् २२०
स्वकाल इष्टकाश्चेत्स्युर्विस्मृता वृषभोपधेः
ऊर्ध्वं मन्त्रैश्चोपदध्याच्चित्यन्तग्रहणादिह २२१
यदा स्मृतिस्तदा वेति स्फुटं बौधायनीयके
शिरोग्र्या पश्चिमा पाद्या षोडशी ऋषभोत्तरा २२२
पाद्याषाढोत्तरा सव्येऽप्यया प्रोक्ता तृतीयका
वशेष्टका पुरो द्वे च पक्षाग्रत्रितयं तथा २२३
नव लोकंपृणा एताः संपन्नं तु शतद्वयम्

अथ द्वितीयायाश्चितेः शुल्बोपधानम्---
द्वितीयस्याश्चितेरत्र शुल्बोपहितिरुच्यते २२४
पुच्छे तु रीतयस्तिस्रो दक्षिणोत्तरविस्तृताः
आद्यायां षोडशीषट्कं पार्श्वयोरर्धिकाद्वयम् २२५
मध्यायां द्वे च षोडश्यौ पार्श्वयोरर्धिकास्तु षट्
संहताग्रे तृतीयस्यां षोडश्यौ पार्श्वयोर्दले २२६
मिलित्वैवं हि सर्वास्ताः पुच्छे विंशतिरिष्टकाः
प्रागायतं रीतिषट्कमात्मन्यत्र प्रकल्पयेत् २२७
मध्यस्थं रीतियुगुलं तत्र कल्प्यं शिरोन्तगम्
याम्यरीतौ षोडशी स्यात्षदर्ध्याः षोडशी तथा २२८
उपादिमायामर्ध्यैका षोडश्यष्टौ तथाऽर्धिकाः
षोडश्यर्ध्या चापरान्तादुपदध्यात्क्रमादिह २२९
मध्यस्थयोस्तु षोडश्यः प्राच्यामर्ध्ये उपान्तिमे
द्वितीयावत्पञ्चमी स्यात्षष्ठी दक्षिणरीतिवत् २३०
सर्वाः स्युरात्मशिरसोर्मिलित्वा षष्टिरिष्टकाः
रीतयो दक्षिणे पक्षे सप्त याम्योत्तरायताः २३१
तत्र पक्षेष्टकास्त्वष्टावेकैकस्यां नियोजयेत्
पक्षाग्राध्यर्चितुष्केण सहिताः षष्टिरिष्टकाः २३२
एवमुत्तरपक्षेऽपि मिलित्वैताः शतद्वयम्
स्थलानुरूपं कर्तव्यमन्तर्बाह्योपधानकम् २३३
प्रस्तारेऽस्मिन्द्वितीये तु पाद्याभिर्यदि पूरणम्
आत्मनः पार्श्वयोरर्ध्या द्वादश द्वादशोत्सृजेत् २३४
तत्र षोडश पाद्याः स्युः षोडश्योऽष्टौ प्रपूरकाः
सूत्रानुरूपः कल्पोऽयं द्वितीयः परिकीर्तितः २३५
द्वितीयस्याश्चितेरेवं शुल्बोपहितिरीरिता

प्रस्तारेऽस्मिन्समे प्राच्यः कल्पिता आत्मरीतयः २३६
अथाऽऽत्मनि द्वितीयस्यामन्त्याऽर्ध्या प्रथमाऽऽश्विनी
दक्षपक्षेऽपराऽग्रीया द्वितीया चाऽऽश्विनी भवेत् २३७
पुच्छाग्ररीत्यामाद्याऽर्ध्या तृतीयाऽऽश्विनिका मता
चतुर्थी सव्यपक्षस्य मूलरीतावथाऽऽदिमा २३८
पञ्चम्याश्विनिका त्वात्मतृतीयस्यां चतुर्थिका
एवं चतुर्दिक्षु मध्ये चाऽऽश्विन्यः पञ्च ईरिताः २३९
यत्रोपधित्सिता तां तामिष्टकां तत उद्धरेत्
तत्रैवोपदधात्येनां परिहृत्य प्रदक्षिणम् २४०
एषोऽनुपरिहारः स्याद्भारद्वाजमुनेर्मतात्
ऋतव्यानां पञ्चकं च वायव्यानां च पञ्चकम् २४१
आश्विनीभ्य उदग्दिक्षु मध्याश्विन्याः पुरः पुरः
मध्याश्विन्या ऋतव्याश्च संयान्यौ द्वे उदङ् मते २४२
संयान्युदक्समाश्लिष्टे अर्ध्ये द्वे तु ऋतव्यके
अपस्यास्त्वत्र पञ्चैव दिक्षु तिसृभ्य उत्तराः २४३
मध्यस्थतिसृणां पूर्वा ह्यपस्या पञ्चमी भवेत्
शिरः शिष्टाश्चतस्रः स्युर्मूर्धन्वत्यः पुरोन्तकाः २४४
दक्षपक्षे वयस्विन्यः पञ्चोदगपवर्गकाः
धेनुमत्यः पञ्च पुच्छे षष्ठवाद्याः प्रकीर्तिताः २४५
पञ्च सव्ये सिंहवत्यः सूत्र एता विकल्पिताः
दक्षिणेंऽसे बस्त इति वृष्णिरित्युत्तरे भवेत् २४६
व्याघ्रस्तु दक्षिणे पक्षे सिंह इत्युत्तरे तथा
मध्ये पुरुष इत्येवं विकल्पार्थः प्रदर्शितः २४७
मध्यापस्या उदक्श्लिष्टा षोडशी ऋषभेष्टका
मन्त्रेष्टकाश्चतुश्चत्वारिंशदस्मिन्द्वितीयके २४८

शिष्टा लोकंपृणा ज्ञेया षट्पञ्चाशद्युतं शतम्
एवं मिलित्वा द्विशती संख्या जातोभयी त्विह २४९

अथ तृतीयायाश्चितेः शुल्बोपधानम्

शुल्बोपधानं त्वाद्यावत्तृतीयस्याः कृते सति
रीतिक्रमोऽत्र पुच्छाग्रात्सौकर्यार्थं प्रकल्प्यते २५०
बहिरन्तश्च वायोर्यन्नयनं व्याननं हि तत्
पञ्चम्यां मगडला मध्या पार्श्वयोर्द्वे ततः पुरः २५१
दक्षिणाग्रा षोडशी च रेतःसिक् त्रितयं त्विदम्
पञ्चम्यामादिमा पाद्या विश्वज्योतिर्भवेदथ २५२
संयान्यौ द्वे तु षोडश्यौ षष्ठरीत्यामिहाऽऽदितः
सप्तम्यां तु चतस्रः स्युः पञ्चम्याद्या ऋृतव्यकाः २५३
शिरोग्र्याऽग्र्याऽपरा दक्षे पुच्छश्रोणिस्थपादिका
सव्यपक्षे पश्चिमाग्र्या नवम्यां च तृतीयका २५४
एवं पञ्च च दिश्याः स्युर्दिक्षु मध्ये यथाक्रमम्
द्वादश्यामादितस्तिस्रः पञ्चम्यादित्रयं तथा २५५
त्रयोदश्यामादिमा च चतुर्दश्यामथाऽऽदिमा
मध्यमा चान्तिमा चैवं विराजो दश ईरिताः २५६
दशपक्षाग्रसंलग्नास्तिस्रः प्राच्यस्तु रीतयः
बृहत्यो द्वादशैतासु पुच्छाग्रे द्वादशैव ताः २५७
सव्यपक्षे दक्षिणवच्चैवं षट्त्रिंशदीरिताः
अन्त्ययोरादिमे द्वे चापरयोर्द्वे उपादिमे २५८
द्वादश्यां तु चतुर्थ्येकाऽपरयोर्द्वे उपादिमे
वालखिल्याः सप्त चैतास्ताः प्रत्यगपवर्गकाः २५९
एवमुत्तरतः सप्त पश्चात्प्राचीरितीरिताः
पृष्ठ्यायाः पार्श्वयोरेवं वालखिल्याश्चतुर्दश २६०

पञ्चम्यामन्तिमा पाद्या षष्ठ्यामन्त्या तु षोडशी
अन्त्यत्रिकं तु सप्तम्यामात्मनोऽन्त्याचतुष्टयम् २६१
द्वादश्यां त्रितयं चान्त्यं यूताख्या द्वादशेरिताः
षोडश्यां मध्यमा पाद्या दिश्याः पुर्वाद्यपक्षके २६२
पुच्छाग्रे त्वन्तिमा पाद्या सव्ये दक्षिणपक्षवत्
मध्ये दिश्याः पुरोऽन्त्यैवं पञ्च चाऽऽत्मेष्टका मताः २६३
सप्तम्यामादितः शिष्टा अष्टम्यामादितो द्वयम्
नवम्यां द्वितयं तद्वद्दशम्यामादिमा ततः २६४
एकादश्यां चाऽऽदिमैवं दशाथर्वशिरोगणः
एकादश्यां तृतीयाऽत्र ऋषभाख्या प्रकीर्तिता २६५
तृतीयकेऽस्मिन्प्रस्तारे मन्त्रवत्यश्चतुःशतम्
लोकंपृणाः षरणवतिः संपन्नं तु शतद्वयम् २६६

--------------

अथ चतुर्थीं चितिं चिनोति

द्वितीयावच्चतुर्थ्यां तु शुल्बोपहितिरीरिता
ग्रीवायामादितः पञ्च षोडश्यौ द्वे शिरोगते २६७
एताः सप्ताक्ष्णया ज्ञेयाः पूर्वस्यां दिशि संस्थिताः
पत्रसंलग्नरीतौ तु प्राक्संस्था दक्षिणा मताः २६८
पुच्छाग्ररीतौ क्रमशः सप्तोदगपवर्गकाः
सव्यपक्षे दक्षिणवच्चैवं साष्टकविंशतिः २६९
सप्तावृत्तिभिरेताः स्युः प्रादक्षिरयेन पूर्वतः
संयान्यौ द्वे ऋतव्ये द्वे आत्ममध्यचतसृषु २७०
आत्मदक्षिणपार्श्वे तु दश सप्त च सृष्टयः
आत्मोपोत्तमरीत्यां तु क्रमादेकादशेष्टकाः २७१

चतस्रस्तदुदक्चैता व्युष्टयो दश पञ्च च
ग्रीवागतोत्तरा त्वाद्या पुच्छाग्राऽन्त्या द्वितीयिका २७२
दक्षपक्षाऽपराऽग्रीया सव्यपक्षाऽपराऽग्रिका
संयान्योः पुरतश्चान्त्या क्रमात्पञ्चासपत्नकाः २७३
ऋतव्ययोः पुरस्तात्तु षोडशी ऋषभेष्टका
लोकंपृणाः शतं त्रिंशन्मन्त्रवत्यस्तु सप्ततिः २७४
एवं च द्विशती संख्या प्रस्तारेऽस्मिंश्चतुर्थके

----------

अथ पञ्चमीं चितिं चिनोति

शुल्बोपधानं पञ्चम्यास्तृतीयावत्कृते सति २७५
तत्र मन्तोपधानं तु वक्ष्यते पूर्वकल्पितम्
आद्याश्चतस्रो द्वादश्यां षोडश्यौ द्वे ततः पुरः २७६
चतस्र आद्या ग्रीवायां विराजो दश पूर्वगाः
दक्षपक्षे त्वादिमायां पक्षाग्रीया तदुत्तरा २७७
तत्पूर्वस्यां द्वितीयाद्यास्तिस्रः पूर्वावलौ ततः
चतुर्थी पञ्चमी चैतत्पूर्वाद्यास्तिस्र एव च २७८
दक्षिणस्यां दिशि त्वेता विराजो दश ईरिताः
आद्याश्चतस्रः पुच्छाग्रे पूर्वस्यां तिस्र आदितः २७९
तत्पूर्वस्यां तिस्र आद्या विराजो दश पश्चिमाः
सव्येऽग्रयाऽऽद्या दक्षिणा च तत्पूर्वा द्वे च दक्षिणे २८०
तत्पूर्वा दक्षिणापूर्वा दक्षिणे द्वे उदक्स्थताः
दश दशैवं दिक्षु स्युश्चत्वारिंशद्विराजकाः २८१
सप्तावशिष्टा द्वादश्यां स्तोमभागास्तु पूर्वगाः
पक्षमध्या दक्षिणतो विराजोत्तरतस्तथा २८२
सप्त शिष्टाः स्तोमभागा दक्षिणां दिशमाश्रिताः

पुच्छाग्रमध्योत्तरतः स्तोमभागास्तु पश्चिमाः २८३
सव्ये विराड्दक्षिणतः पक्षमध्योत्तरास्त्विमाः
नवम्यां मध्यमास्तिस्र एकत्रिंशदिह स्मृताः २८४
षोडश्यां मध्यमापक्षे तृतीयस्यां द्वितीयिका
पुच्छाग्रे त्वष्टमी सव्ये तृतीयस्यामुपोत्तमा २८५
पुच्छाग्रे सप्तमी चान्त्या पञ्च नाकसदो मताः
उपरिष्टान्नाकसदां पञ्च चोडाः प्रकीर्तिताः २८६
दशम्येकादशीरीत्योर्द्वितीये द्वे ऋतव्यके
तयो रीत्योरुपान्त्ये द्वे संयान्यौ परिकीर्तिते २८७
एकादश्यां तृतीया च विश्वज्योतिरिह स्मृता
सप्तम्यामादितस्तिस्रो रेतःसिक् त्रितयं भवेत् २८८
रेतःसिचां मण्डलोदग्घिरण्याख्येष्टका ततः

\-\-\-\-\-\-\-\-\-\-\-\-\-\-

विरम्य श्वोभूते

याज्ञसेन्याद्युपहितिः पञ्चमी चितिशेषके २८९
षोडश्यामादिमा चान्त्या शिरोग्रीया तु पादिका
एता मूर्ध्वन्वतीस्तिस्रो गायत्र्यः संप्रकीर्तिताः २९०
दक्षे चोडोत्तरा चैका तत्पूर्वा च तदुत्तरा
त्रिष्टुभस्तिस्र एताः स्युर्दक्षिणां दिशमाश्रिताः २९१
पुच्छद्वितीयरीतौ तु जगत्यस्तिस्र ईरिताः
सव्ये चोडा दक्षिणैका तत्पूर्वा दक्षिणा तथा २९२
तिस्रोऽनुष्टुभ एताः स्युस्त्वां चित्रेत्यादिका इह
दक्षपक्षेऽप्ययास्तिस्रो बृहत्यः पश्चिमा इह २९३
उत्तरा बृहतीनां तु तिस्र उष्णिह ईरिताः

आदितः पङ्क्तयस्तिस्रः षोडश्यः सव्यपार्श्वगाः २९४
पङ्क्तीनामुत्तरास्तिस्रोऽप्ययास्त्वक्षरपङ्क्तयः
उष्णिहां प्रागतिच्छन्दाः षोडशी दक्षिणाग्रगा २९५
अष्टम्यां मध्यगास्तिस्रो द्विपदास्तिस्र ईरिताः
अन्तर्नासिकया वायोर्नयनं स्यादपाननम् २९६
ततोऽन्तिमा त्रयोदश्यां षोडशी स्याद्विकर्णिका
दक्षपक्षोत्तरे शिष्टाश्चतुर्विंशतिरिष्टकाः २९७
तासां तु पश्चिमा ह्यष्टौ क्रमशः सयुजः स्मृताः
तदग्रे कृत्तिकाः सप्त क्रमादम्बादिका इह २९८
पुरोवातमुखाः प्रोक्ताः पञ्चम्यां पञ्च वृष्टयः
कृत्तिकाग्रेऽवशिष्टास्तु नवाऽऽदित्येष्टका इह २९९
मराडलाया उदक्पञ्च यशोदाः परिकीर्तिताः
षष्ठीस्थाः पूर्वगोपान्त्या पञ्च भूयस्कृतः स्मृताः ३००
सव्ये दक्षिणभागे तु चतुर्विंशतिरिष्टकाः
तासां पूर्वाप्ययां त्यक्त्वा शिष्टाः स्वपरदिक्क्रमात् ३०१
अग्निरूपाणि पञ्चैव पञ्च च द्रविणोदकाः
द्रविणोदाऽग्रतः प्रोक्ता षडायुष्याः क्रमादिह ३०२
अग्ने इत्यग्निहृदयं दशम्यां तु तृतीयिका
आयुष्याग्रेऽवशिष्टास्ताः सप्तर्तव्याः प्रकीर्तिताः ३०३
इन्द्रतन्वाद्यासरिद्भ्यः साहस्रेऽनवकाशतः
द्विषाहस्रे भवेत्तासामुपधानमिति स्थितिः ३०४
हिरायाः पञ्च संप्रोक्ताश्चतस्रस्तृष्णकास्ततः
सप्तम्यामन्तिमा पाद्या प्राजापत्या प्रकीर्तिता ३०५
एकादश्यामन्तिमा तु षोडशी ऋषभाभिधा
पञ्चदश्यामादिमा च दक्षपक्षे पुरोऽग्रिका ३०६

पुच्छाग्रे पञ्चमी पाद्या सव्ये पूर्वाऽग्रिका तथा
त्रयोदश्यां तृतीया स्यादह्नां रूपाणि पञ्च च ३०७
पुच्छमूलस्थरीत्यां तु ह्यज्यानीपञ्चकं स्मृतम्
अश्मेष्टकाश्चतुर्दिक्षु वज्रिणयाख्या उदाहृताः ३०८
रूपाणामुत्तरास्तिस्त्रः पूर्वादावुत्तरा तु या
दक्षिणैवं चतस्त्रस्तु दिक्षु राष्ट्रभृतो मताः ३०९
शल्केष्टका दिक्षु मध्ये पञ्च स्युः सर्वतोमुखाः
रूपाणामथवा स्थाने सर्वतोमुखमादिशेत् ३१०
रूपाणां तु तदा लोप इति कैश्चिद्विकल्पितम्
सप्तोनद्विशतं चास्मिन्मन्त्रवत्यस्तु पञ्चमे ३११
चतुर्दश्यामन्त्यपाद्या पक्षशिष्टं चतुष्टयम्
तृतीयस्यामन्तिमा च सव्ये पूर्वाऽप्यया तथा ३१२
सप्त लोकंपृणा एताः संपन्नं तु शतद्वयम्
इषुभिस्तिसृभिर्युक्तं तिसृधन्वं धनुः स्मृतम् ३१३
आग्नीध्रीयं च होत्रीयं प्रशास्त्रीयं तृतीयकम्
शंसीयं चाथ पोत्रीयं नेष्ट्रच्छाब्रह्मधिष्णियम् ३१४
मार्जालीयं च चात्वालं शामित्रावभृथीयके
एवं क्रमेणोपदध्यात्तत्तत्संख्यानुरूपतः ३१५
आग्नीध्रीयं तु नवधा कृत्वा मध्येऽश्मनः स्थितिः
पूर्वादावष्टभिर्धिष्ण्यमिष्टकाभिर्भवेच्च तत् ३१६
होत्रीयं दक्षिणोदञ्चं त्रेधा प्राञ्चं चतुष्कृतम्
एवं कृतेऽरत्निमितं धिष्ण्यं स्याद्द्वादशेष्टकम् ३१७
प्रशास्त्रीयं त्रिधोदञ्चं पूर्वकोष्ठं त्रिधा मतम्
चतुर्धा त्वपरे कोष्ठ एवमेकादशेष्टकम् ३१८
मार्जालीयं त्रिधोदञ्चं द्वेधा प्राञ्चं षडष्टकम्

ब्राह्मणाच्छंसिनो धिष्ण्यं प्राञ्चं त्रेधा कृतं भवेत्  ३१९
मध्यकोष्ठं द्विधा पार्श्वे त्रेधैवं त्विष्टकाष्टकम्
अष्टेष्टकानि शिष्टानि धिष्णियान्येवमेव हि
अमृन्मयीरिष्टका यास्ताः सर्वा अवटे क्षिपेत्  ३२०
इन्द्रं वितत्वाहुतिवाङ्ग आसन्नारुह्य साश्वोऽभ्यदित्यथायाम्
अमृन्मयीनामपि चेष्टकानां कुर्यात्तयादेवतमत्र साम  ३२१
वार्षाहराख्यं यदपां निधिस्तद्यद्वाऽन्यमिच्छन्ति तदेव चोद्यम्
रुक्मं ह्युदक्छिद्रमथोपदध्याद्धैमं नरं प्राक्शिरऊर्ध्वबाहुम्  ३२२
ध्यात्वाऽन्तरिक्षं हरविन्दपर्णं तत्स्थं रवेर्मण्डलमेव रुक्मम्
आतृणकं मुक्तिपदं मुनीनां तन्मण्डलस्थं पुरुषं पुराणम्  ३२३
आधारयोर्नास्ति हिरण्यमस्ति स्वाहेति भूमौ निखनेत्सस्रुगादीन्
स्रुचोरुपस्थानममन्त्रकेऽपि तुल्यं तया देवतयोपधानम्  ३२४
प्रजापतिस्त्वाद्यबुधश्च मन्त्रं देवं तयादेवतमन्ततोऽभूः
दद्यादविद्वान्यजमानतो गां लब्ध्वेष्टकानामिह मण्डलाद्याः  ३२५
शूर्पोलूखलमुसलान्युखा पञ्च शिरांसि सर्पशीर्षं च
द्विपदाः प्राणभृन्मन्त्रा अन्त्याः पञ्चपदा मताः  ३२६
त्रिपदौ प्रथमौ मन्त्रौ नवमश्च गणे गणे
अपाना द्विपदा मन्त्राः षष्ठं त्रिपदमिष्यते  ३२७
दशान्नान्तेषु पितर इत्यादिजप इष्यते
ऋषीष्टकाः शतं चापि प्राणापानभृतः शतम्  ३२८
सहस्रे ते विकल्प्येते द्विषाहस्रे समुच्चयः
द्विषाहस्रादिके तृणणा विकर्णी चोत्तमस्तरे  ३२९
छन्दःस्वक्षरपङ्क्तीनां पूर्वयाऽन्त्या विकल्प्यते
द्विषाहस्राग्निके श्येने मन्त्रोपहितिरुच्यते  ३३०
पञ्चम्यां पञ्चमी रीत्यामाक्रमण्युपधीयते

द्वितीया मराडला तस्यामन्वारोहेत्तदुत्तरम्  ३३१
तस्यामाद्या तथाऽन्त्या च द्वादश्यामपराऽपि च
चतुर्थीं तु चतुर्दश्यां सप्तम्यन्ते तथैव च  ३३२
षोडश्यामन्तिमे पाद्ये विज्ञेयाश्च यथाक्रमम्
वामभृत्सिग्द्वयं ज्योतिःसंयान्यौ द्वे ऋृतव्यके  ३३३
रेतःसिचो न चेतव्याश्चिनुते विवया यदि
एकादश्यन्तिका चैव षोडशी स्थविरस्य सिक्  ३३४
संयानी पूर्विकाऽऽषाढा तत्पूर्वा घर्मसंज्ञिका
कुलायिनी च तत्पूर्वा पुरुषाकृतिरुच्यते  ३३५
चतुर्दशीत्रयोदश्योराद्ये तिस्रस्ततोऽपराः
प्रागायताश्च षोडश्यः सप्तम्यां त्रिचतुर्थिके  ३३६
द्वितीया षष्ठरीतिस्था द्वादश प्रथमो गराः
मध्यमे च त्रयोदश्यां तिस्रः पाद्याश्च पश्चिमाः  ३३७
प्रागायताश्च षोदश्यस्तिस्रः पाद्याश्च पश्चिमाः
द्वितीयो गरा एष स्यात्तृतीयो गरा उच्यते  ३३८
चतुर्दशीत्रयोदश्योरन्त्ये तिस्रस्ततोऽपराः
प्रागायताश्च षोडश्यः पश्चिमे पादसंज्ञिके  ३३९
अन्त्याऽणूका तथा षष्ठ्यां तृतीयो गरा एष तु
षोडश्यामादिमा पाद्या षौडश्यौ पश्चिमे ततः  ३४०
पश्चिमे पादसंज्ञे च पञ्चापस्याः पुरः स्थिताः
अग्रिया दक्षिणे पक्षे चाग्र्यास्तिस्रस्तदुत्तराः  ३४१
तदुत्तरास्तु पञ्चैता अपस्या दक्षिणा मताः
मध्ये तिस्रस्तु पुच्छाग्रे पूर्वे चैता अपस्यकाः  ३४२
अग्रिया चोत्तरे पक्षे चतस्रो दक्षिणास्ततः
अपस्या उत्तराः पञ्च हिरगयस्येष्टकाः पराः  ३४३

अग्रसंज्ञे तथा द्वे च पक्षयोरुभयोरपि
तृतीये अग्रतो हित्वा सव्यपक्ष ऋषीष्टकाः  ३४४
साग्रियाः साप्ययस्थाश्च षट्चत्वारिंशदिष्टकाः
आयवादिगणाः षट् स्युर्यथासंख्येन चोदिताः  ३४५
सव्यवद्दक्षिणे पक्षे सप्तम्यामादिमा परा
द्वादश्यामादिमा पाद्या षोडश्यो दक्षिणामुखाः  ३४६
पश्चिमा पादसंज्ञा च सपत्नेत्यादिषड्गणः
शुल्बोपधानं द्वैतीयं शिरस्यात्मनि पक्षयोः  ३४७
प्राणापानभृतां मध्ये मन्त्रोपहितिरुच्यते
दक्षिणाप्ययपार्श्वस्था तुरीया पक्षसंज्ञिका  ३४८
तत्पूर्वाश्चोत्तराश्चाध्र्याः पञ्चैवं षोडशी तथा
दक्षिणा षोडशी चाध्र्या प्राणभृत्प्रथमो गणः  ३४९
सव्येतरे तु पक्षाख्ये निर्णामोत्तरदक्षिणे
पश्चिमा दक्षिणा प्रत्यग्दक्षिणाऽपरदक्षिणा  ३५०
पश्चिमा दक्षिणाऽध्र्या च दशैताः प्राणभृद्गणः
चतुर्थ्यां मध्यमाऽणूका दक्षिणा पश्चिमोत्तरे  ३५१
पञ्च पाद्यास्तथा पश्चात्पुच्छे तु प्राणभृद्गणः
सव्यपक्षे तु निर्णामा दक्षिणोत्तरपश्चिमा  ३५२
उत्तरा पश्चिमा तस्या उत्तरा पश्चिमोत्तरे
पश्चिमा चार्धसंज्ञा स्यादुत्तरोत्तर एव तु  ३५३
तृतीयरीतिगा षष्ठी पश्चिमा दक्षिणापराः
दक्षिणापश्चिमास्तिस्त्रो मध्ये तु प्राणभृद्गणः  ३४५
पञ्चम्यन्त्याऽर्धसंज्ञा च षोडश्यौ पश्चिमे ततः
अर्धसंज्ञास्तथा पञ्च पक्षाख्या पञ्चमी परा  ३५५
आद्योत्तरे पूर्वतदुत्तरे च पूर्वोत्तरे पूर्वतदुत्तरे च

पूर्वोत्तरे पक्षसि दक्षिणे तु क्रमेण चापानभृतां गणः स्यात्
पुच्छस्योत्तरकोणे तु षट्पाद्या पूर्वदक्षिणे
पूर्वा च दक्षिणा चैका पृश्चिमोऽपानभृद्गणः ३५७
अग्रिया दक्षिणापूर्वा दक्षिणा पूर्वदक्षिणे
पूर्वा च दक्षिणापूर्वा दक्षिणा चोत्तरो गणः ३५८
षष्ठाद्या षोडशी पूर्वा अर्धसंज्ञास्तु सप्त ताः
चतुर्थ्यां पञ्चमी पूर्वा मध्यमोऽपानभृद्गणः ३५९
निर्णामादुत्तराः पक्षे दक्षिणे संततीः क्षिपेत्
निर्णामादुत्तराः सव्ये पक्षे पञ्च वशाः स्मृताः ३६०
अधोधस्ताच्च कुम्भाख्या पुरस्तात्त्रिवृदादयः
त्रिवृत्तेषु प्रतिस्थानं कुर्याद्भाष्यानुसारतः ३६१
ऋषभाप्ययपूर्वा स्याच्छिष्टा लोकंपृणा इह
एकाशीतिरिहोक्ताः स्युर्युक्तायूनोनुसारतः ३६२
द्वितीयामथ चिन्वीत मन्त्रैः सूत्रकृतोदितैः
द्वादश्यामादितः पाद्याः पञ्चाऽऽश्विन्यः प्रकीर्तिताः ३६३
ऋतव्याः पश्चिमास्तासां पश्चिमः प्राणभृद्गणः
शिरस्या पक्षयोरग्रे पुच्छाग्रीया च मध्यमा ३६४
प्राणभृत्पश्चिमा चैका पञ्चापस्या यथाक्रमम्
पक्षाख्या दक्षिणे पक्षे संयान्यौ द्वे ऋतव्यके ३६५
पञ्चम्यामादिमे पूर्वे तत्पूर्वात्र्यविपञ्चकम्
पञ्चम्यामन्तिमे पूर्वाः पल्लवाद्वयपञ्चकम् ३६६
चतुर्दश्यादिमाऽऽन्त्या च पक्षयोरग्रसंज्ञिके
अष्टम्यां मध्यमा चैव बस्तोवयादिपञ्चकम् ३६७
शिरस्येकाऽथ पाद्या च षोडश्यौ पश्चिमे ततः
पश्चिमा पादसंज्ञा च वयस्यागण एव तु ३६८

अष्टम्यां तु पुरीषाख्या दक्षिणा ऋषभेष्टका
शिष्टा लोकंपृणास्तत्र षट्पञ्चाशच्छतत्रयम्  ३६९
तृतीयामथ चिन्वीत मन्त्रैः सूत्रकृतोदितैः
आतृराणकोपधानादि हिरायान्तं तु सूत्रितम्  ३७०
तृतीया पादसंज्ञा तु सप्तम्यां मराडला मता
तिस्रो रेतःसिचो ह्यत्र चेतव्या विवया यदि  ३७१
उत्तरा मराडला याः स्युर्विश्वज्योतिस्तदुत्तरा
आद्यायामन्तिमे पूर्वे मध्यीये पक्ष उत्तरे  ३७२
एताः षट्क्रमशो ज्ञेया द्वे द्वे संयान्यृतव्यके
मूर्ध्नि पक्षाग्रयोः पुच्छे मध्ये चान्त्या शिरस्यगा  ३७३
अग्रिये मध्यमापुच्छे अष्टम्यां मध्यगा अपि
षोडश्यामुत्तरे पाद्ये षोडशी पश्चिमा ततः  ३७४
तिस्रः पादेष्टकाः पश्चादणूके पश्चिमे ततः
पादेष्टके च तत्पश्चात्प्राणभृत्संज्ञिका दश  ३७५
अग्रिया दक्षिणे पक्षे तिस्रः पक्षेष्टका नव
पुच्छाग्रीयास्तथा सप्त दक्षिणापदकोणगाः  ३७६
तिस्रोऽणूकाश्च षोडश्यौ दक्षवत्सव्यपक्षके
षट्त्रिंशदिष्टका एता बृहतः परिकल्पिताः  ३७७
षोडश्यामादिमा पाद्या षोडशी पश्चिमा ततः
पादेष्टका च तत्पश्चादणूका पश्चिमा पिच  ३७८
पादेष्टका च षोडश्यौ वालखिल्यः प्रकीर्तिताः
नवमी दशमी चैव पुच्छाग्रीया तु षोडशी  ३७९
अणूकापूर्विकापाद्ये तत्पूर्वाऽणूकसंज्ञिका
यन्त्रीराट्सप्त विज्ञेया भूताख्या द्वादशाऽऽत्मनि  ३८०
तृतीयामिह जानीयादृषभा षष्ठरीतिगा

नवाशीतिरिहोक्ताः स्युः शिष्टा लोकंपृणा इह ३८१
चतुर्थ्यामथ चित्यायां मन्त्रोपहितिरुच्यते
आशुस्त्रिवृत्क्रमेणात्र षोडशैवेष्टका इह ३८२
अग्नेर्भागानुवाकेन द्वादशैवेष्टका अपि
एताभ्यामनुवाकाभ्यां यथाब्राह्मणमिष्टकाः ३८३
एकैका च क्रमेणापि चतुर्दिक्षु प्रदक्षिणम्
दक्षिणाप्ययगाग्रीया संयान्यौ द्वे ऋतव्यके ३८४
द्वादश्यां रुद्रपादाश्च षोडश्याः पश्चिमास्तु षट्
सप्तम्यां रुद्रपादाश्च षोडश्यः पञ्च पूर्विकाः ३८५
सृष्टयो व्युष्टयश्चैता वैयुष्टेये तु षोडशी
नवम्यां मध्यमा ज्ञेया ऋषभा चैव षोडशी ३८६
षट् च षष्टिरिहोक्ताः स्युः शिष्टा लोकंपृणा इह
चितौ हिरण्यमित्यादिश्चितिधर्मः प्रवर्तते ३८७
पञ्चम्यामथ चित्यायां मन्त्रोपहितिरुच्यते
षोडश्यां मध्यमा पाद्या पुच्छाग्रीया च सप्तमी ३८८
पक्षयोरन्तिमे चाग्रे सप्तम्यां मध्यमाऽपि च
असपत्नीरिति ज्ञेया पञ्च दिक्षु यथाक्रयम् ३८९
चतस्त्र आदिमाः पाद्या द्वादश्यामपि पूर्विके
पाद्ये च षोडशी पाद्या विराजः पुरतो दश ३९०
आद्योत्तरे पूर्वतदुत्तरे च पूर्वोत्तरे पूर्वतदुत्तरे च
पञ्च पाद्यास्तु पुच्छाग्रे षोडशी दक्षिणाऽपि च ३९१
पूर्वा तदुत्तरा पूर्वा विराजः पश्चिमा दश
अग्रिया दक्षिणे पूर्वा दक्षिणा पूर्वदक्षिणे ३९२
पूर्वा च दक्षिणे चैता विराजो दश उत्तराः
द्वादश्यामुत्तराः सप्त स्तोमभागाः पुरोगताः ३९३

पूर्वदक्षिणभागीयान्विराजान्सप्त दक्षिणाः
स्तोमभागास्तु पुच्छाग्रे उत्तराः सप्त पादिकाः ३९४
विराडुत्तरपूर्वाः स्युः सव्यपक्षेऽपि सप्त ताः
आत्मन्युदङ्मुखास्तिस्त्रः स्तोमभागावशेषिताः ३९५
असपत्नीसमीपस्था नाकसत्पञ्च चोडकाः
हेमोपधामं सप्तम्यामष्टम्यां मण्डला मता ३९६
सव्यपक्षे तु मध्यानामुत्तरा स्थविरन्यसिक्
उत्तरा मण्डला याः स्युः सप्तम्यां त्रिचतुर्थके ३९७
विश्वज्योतिर्ऋतव्ये च संयान्यौ च यथाक्रमम्
अपराह्णिकचर्याद्यः श्वोभूते याज्ञसेनिकी ३९८
त्रयोदश्यन्तिमे पूर्वा गायत्र्यः पुरतः स्थिताः
त्रिष्टुभो दक्षिणे पक्षे विराजा उत्तराः स्मृताः ३९९
जगत्यः पुच्छपार्श्वस्था द्वितीयस्यान्तिमे पुरा
विराजां दक्षिणाः सव्ये तिस्रोऽनुष्टुभ एव हि ४००
बृहतीरुष्णिहाश्चापि पङ्क्त्योऽक्षरपङ्क्तयः
तिस्त्रस्तिस्त्रश्च चेतव्याः षोडश्यो मध्य आत्मनि ४०१
तासामुत्तरपूर्वे स्यादतिच्छन्दा उदङ्मुखी
शिरस्याषोडशीपाद्ये पश्चिमे द्विपदाः स्मृताः ४०२
दक्षिणाऽप्ययतुर्याग्र्यां दक्षिणे पक्षसंज्ञिके
उत्तराऽप्ययतुर्यग्र्यामुत्तरे पक्षसंज्ञिके ४०३
वर्जयित्वा तु चेतव्याः पक्षशेषात्मशेषयोः
मध्यीया दक्षिणास्तिस्त्रः पक्षाख्ये दक्षिणे ततः ४०४
उत्तराऽपि च मध्यानां पक्षाख्ये दश पञ्च च
सयुजोऽष्टौ तथा पञ्च जीमूताः सप्त कृत्तिकाः ४०५
नाकसत्पार्श्वगास्तिस्त्रः शिरस्यात्मनि पुच्छगे

त्रिष्टुभामुत्तरां चैकां दक्षिणाऽनुष्टुभां ततः ४०६
वृष्टिसन्य इमा ज्ञेयाः पञ्च दिक्षु यथाक्रमम्
उत्तराऽप्ययगाग्रीये पश्चिमे च षडुत्तरे ४०७
आदित्या इति विज्ञेया घृतपिण्डा अथोत्तराः
दक्षिणाऽप्ययगाग्रीयास्तिस्रः पक्षेष्टका अपि ४०८
षोडश्यो दक्षिणाग्राश्च यशोदादिगणद्वयम्
अग्निरूपाणि पञ्च स्युरादित्यानामधोत्तराः ४०९
द्रविणोदास्तु पुच्छे स्युः सप्तम्यामादिमे ततः
चतस्रोऽणूकसंज्ञाः स्युरायुष्यास्तु षडिष्टकाः ४१०
उत्तराऽप्ययगाग्रीयां तृतीयां हृदयं विदुः
चतुर्थ्यामादिमे पाद्ये पञ्चम्यां पञ्च पादिकाः ४११
ऋतव्या उत्तरे पक्षे शिष्टास्त्वेकादशेष्टकाः
शुल्बोपधानं द्वैतीये कृत्वा मन्त्रोपधीयते ४१२
पञ्चम्यां पञ्चमी तुर्या चतस्रश्च तदन्तिमाः
षष्ठिरीतिगतां षष्ठीं पूर्वा पूर्वा तथोत्तरे ४१३
एकादशेष्टका एता हित्वा तत्रोपरीवरीः
उत्तरा इन्द्रनामानि दक्षिणे पक्ष उच्यते ४१४
अप्यया दक्षिणे पक्षे सप्तमी दक्षिणा तथा
आद्ये च पश्चिमां हित्वा तनुवो हीन्द्रयज्ञयोः ४१५
ज्योतिष्मतीगणश्चाष्टौ प्रस्तारेऽपि तु पूर्वके
चतस्रश्चोत्तरे पक्ष उभयोर्द्विदशेष्टकाः ४१६
वचनात्सूत्रकारस्य चितेरैक्यं द्विधाकृतम्
पुच्छाग्रे मध्यमे हित्वा पूर्वे तत्पूर्वके तथा ४१७
पौर्णमासी तृतीयान्त्या पश्चिमा कृत्तिका मता
कृत्तिकादिविशाखान्ता प्रत्यग्रीतिस्तु चीयते ४१८

रोहिणी च चतुर्थी स्यान्मृगशीर्षं तृतीयकम्
आर्द्रां च पञ्चमीं कृत्वा षष्ठीं पुनर्वसूं तथा ४१९
तिष्योऽष्टम्युपधातव्या सप्तमी सर्पदेवता
मघाश्च नवमीं कुर्याद्दशमी पूर्वफल्गुनी ४२०
पुच्छे द्वितीयरीत्यां तु द्वितीया चार्धसंज्ञिका
तृतीये प्रथमार्धा च द्वितीये त्वादिमा परा ४२१
अपरा षोडशी चार्धा चैवमेव चतुर्दश
एवं तु पूर्वापरयोरसंश्लेषो भवेदिह ४२२
न पूर्वापरयोस्तत्र विद्यते विधिरत्र तु
सूत्रकारेण चाप्यत्र पूर्वां पूर्वामितीरितम् ४२३
अपरामपरामेवमुपधाय विशाख्यतः
एकैकव्यवधानेन नक्षत्राणि चतुर्दश ४२४
उत्तरादक्षिणावच्च कुर्यात्सूत्रानुसारतः
अमावास्याऽथ पुच्छाग्रे सप्तमी षोडशी तथा ४२५
अनुराधादियाम्यन्ता प्राची रीतिस्तु चीयते
एकैकव्यवधानेन त्रयोदशेष्टका इह ४२६
आद्यायामन्त्यसंज्ञाऽर्धा द्वितीयस्यां तु सप्तमी
तस्यामेवाष्टमी चार्धा तृतीयस्यां चतुर्थिका ४२७
आत्मन्याद्या चतुर्थ्यां तु तृतीया तु द्वितीयिका
चतुर्थी पञ्चमी चैव सप्तमी षष्ठसंज्ञिका ४२८
अष्टमी षोडशी चैव नवमी चार्धसंज्ञिका
पौर्णमासी चतुर्थ्यन्त्या उभयोस्त्रिंशदिष्टकाः ४२९
उत्तरा इन्द्रनामानि सरितोऽष्टौ समीरिताः
विश्ववर्मादिहेमान्ता आतृरणादि चतुष्टयम् ४३०
प्राणायादिचतुर्ष्वेषु चक्षुषे त्वाऽनुषज्यते

सरितामुत्तराः पञ्च रूपारायह्णामुदीरिताः ४३१
आत्मेष्टकाव्रतं प्रोक्तं भाष्यकारेण चात्र तु
मन्त्रैः प्राच्यादिभिर्ज्ञेयाः पञ्च दिक्षु यथाक्रमम् ४३२
पञ्चम्यन्त्याऽर्धसंज्ञा च पक्षयोरर्धसंज्ञिके
पुच्छाग्ररीतिगा षष्ठी द्वितीयस्यां च सप्तमी ४३३
आत्मेष्टका इमा ज्ञेयाश्चिनुते वैश्वदैविकम्
वैश्वदेव्यो द्वितीयस्यामादितः पञ्च एव हि ४३४
दक्षिणापरकोणे तु वामदेव्या भवेदिह
आद्यायामादितस्तिस्रस्तस्य पूर्वा दशेष्टकाः ४३५
अथर्वशिर एव स्याच्छिष्टा अप्यययोर्द्वयोः
रथंतरं बृहच्च स्यात्पुच्छाग्रे पञ्चमी तथा ४३६
पूर्वा तु विश्रयस्था च यज्ञायज्ञीसंज्ञिका
पञ्चम्यां पञ्चमी तुर्या ऋषभा च प्रजापतिः ४३७
आत्मेष्टकासमीपस्थाः पञ्चाज्यान्य उदीरिताः
इन्द्रस्येति यथासूत्रमश्मनां दिक्षु पञ्चसु ४३८
रूपाणामुत्तराः षट्च लोकाख्याः पावमानिकाः
छन्दस्याः सप्त तत्रैव मध्ये राष्ट्रभृतः स्मृताः ४३९
आत्मन्युत्तरतः शिष्टाश्चतस्रो राष्ट्रभृत्तथा
पञ्च पञ्च च हेमाख्याः पञ्च वा सर्वतोमुखाः ४४०
षष्ठ्यामन्त्या विकर्णीं स्यात्प्रोथदश्वेतिमन्त्रतः
आतृणणकोपधानं स्याच्छिष्टा लोकंपृणा इह ४४१
विंशतिचोत्तरे चैका त्रयः प्रस्तर एव तु
चितौ हिरणयमित्यादिश्चितिधर्मः प्रवर्तते ४४२
द्वितीयादिचितित्रयमन्त्राः प्रथमसाहस्रवदेव
प्रथमप्रस्तारशेषं द्वितीयप्रस्तारं च लोकंपृणा एव ४४३

संविधाय चतुरस्रमेकयुक्त्रिंशदङ्गुलशलाकया समम्
अक्ष्णयाकलितसूत्रमस्य यत्तत्तथैकविधमानमुच्यते ४४४
हारो बभौ बालयतानुगामी सारं रसं दुर्बल साधनं यशः
श्येनार्क एवंविधमानदण्ड एकादिषण्णां सनरस्य वह्नेः । इति
४४५

इति चयनोपयोगिकारिकाः

Source: *Satyāṣāḍhaviracitaṃ Śrauta Sūtram*, Kāśīnāthaśāstrī Āgāśe, ed., Ānandāśrama Press, 1907 (Prashna 25 and Chayanopayogikārikāh).